

## प्रथमः पाठः

# l Hkkf"krkfu



पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् ।
मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ।। 1 ।।

सत्येन धार्यते पृथ्वी सत्येन तपते रविः ।
सत्येन वाति वायुश्च सर्वं सत्ये प्रतिष्ठितम् ।। 2 ।।

दाने तपसि शौर्ये च विज्ञाने विनये नये ।
विस्मयो न हि कर्त्तव्यो बहुरत्ना वसुन्धरा ।। 3 ।।

सद्भिरेव सहासीत सद्भिः कुर्वीत सङ्गतिम् ।
सद्भिर्विवादं मैत्रीं च नासद्भिः किञ्चिदाचरेत् ।। 4 ।।

धनधान्यप्रयोगेषु विद्यायाः संग्रहेषु च ।
आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ।। 5 ।।

क्षमावशीकृतिर्लोके क्षमया किं न साध्यते ।
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ।। 6 ।।





# शब्दार्थाः

| | | |
|---|---|---|
| **पृथिव्याम्** | - धरती पर | on the earth |
| **सुभाषितम्** | - सुन्दर वचन | good sayings |
| **मूढैः** | - मूर्खों के द्वारा | by fools |
| **पाषाणखण्डेषु** | - पत्थर के टुकड़ों में | in stone pieces |
| **रत्नसंज्ञा** | - रत्न का नाम | name of precious stone |
| **विधीयते** | - किया/समझा जाता है | to be done/given |
| **धार्यते** | - धारण किया जाता है | bears |
| **तपते** | - जलता है | burns/heats |
| **वाति** | - बहता है / बहती है | blows |
| **वायुश्च** (वायुः+च) | - पवन भी | air |
| **प्रतिष्ठितम्** | - स्थित है | situated |
| **तपसि** | - तपस्या में | in penance |
| **शौर्ये** | - बल में | in bravery |
| **नये** | - नीति में | in policy |
| **विस्मयः** | - आश्चर्य | wonder |
| **बहुरत्ना** | - अनेक रत्नों वाली | possessing many jewells |
| **वसुन्धरा** | - पृथिवी | earth |
| **सद्भिरेव** (सद्भिः+एव) | - सज्जनों के साथ ही | with gentlemen alone |
| **सहासीत** (सह +आसीत) | - साथ बैठना चाहिए | should sit together |
| **कुर्वीत** | - करना चाहिए | should do |
| **सद्भिर्विवादम्** (सद्भिः+विवादम्) | - सज्जनों के साथ झगड़ा | quarrel with gentlemen |









| | | | |
|---|---|---|---|
| **क्षमावशीकृतिर्लोके** (क्षमावशीकृतिः+लोके) | – | संसार में क्षमा (सबसे बड़ा) वशीकरण है | forgiveness is an enchantment in the world |
| **नासद्भिः** (न+असद्भिः) | – | असज्जन लोगों के साथ नहीं | not with ungentlemanly people |
| **धनधान्यप्रयोगेषु** | – | धनधान्य के प्रयोग में | in the use of wealth |
| **संग्रहेषु** | – | संग्रहों में, संचय करने में | in accumulation |
| **त्यक्तलज्जः** | – | संकोच या भीरुता को छोड़नेवाला | one who has given up shyness |
| **शान्तिखड्गः** | – | शान्ति की तलवार | sword of peace |






1. **सर्वान् श्लोकान् सस्वरं गायत।**

2. **यथायोग्यं श्लोकांशान् मेलयत-**

| क | ख |
|---|---|
| धनधान्यप्रयोगेषु | नासद्भिः किञ्चिदाचरेत्। |
| विस्मयो न हि कर्त्तव्यः | त्यक्तलज्जः सुखी भवेत्। |
| सत्येन धार्यते पृथ्वी | बहुरत्ना वसुन्धरा। |
| सद्भिर्विवादं मैत्रीं च | विद्यायाः संग्रहेषु च। |
| आहारे व्यवहारे च | सत्येन तपते रविः। |







3. **एकपदेन उत्तरत-**

(क) पृथिव्यां कति रत्नानि?

(ख) मूढैः कुत्र रत्नसंज्ञा विधीयते?

(ग) पृथिवी केन धार्यते?

(घ) कैः सङ्गतिं कुर्वीत?

(ङ) लोके वशीकृतिः का?

4. **रेखाङ्कितपदानि अधिकृत्य प्रश्ननिर्माणं कुरुत-**

(क) सत्येन वाति वायुः।

(ख) सद्भिः एव सहासीत।

(ग) वसुन्धरा बहुरत्ना भवति।

(घ) विद्यायाः संग्रहेषु त्यक्तलज्जः सुखी भवेत्।

(ङ) सद्भिः मैत्रीं कुर्वीत।

5. **प्रश्नानामुत्तराणि लिखत-**

(क) कुत्र विस्मयः न कर्त्तव्यः?

(ख) पृथिव्यां त्रीणि रत्नानि कानि?

(ग) त्यक्तलज्जः कुत्र सुखी भवेत्?











**6. मञ्जूषातः पदानि चित्वा लिङ्गानुसारं लिखत–**

रत्नानि वसुन्धरा सत्येन सुखी अन्नम् वह्निः रविः पृथ्वी सङ्गतिम्

| पुँल्लिङ्गम् | स्त्रीलिङ्गम् | नपुंसकलिङ्गम् |
|---|---|---|
| .................... | .................... | .................... |
| .................... | .................... | .................... |
| .................... | .................... | .................... |

**7. अधोलिखितपदेषु धातवः के सन्ति?**

| पदम् | धातुः |
|---|---|
| करोति | .................... |
| पश्य | .................... |
| भवेत् | .................... |
| तिष्ठति | .................... |



